# आपदुद्धारक श्रीहनूमत्स्तोत्रम्

विभीषणकृतम्

श्रीहनुमते नमः । अस्य श्रीहनुमत्स्तोत्रमहामन्त्रस्य, विभीषण
ऋषिः, अनुष्टुप् छन्दः, हनुमान् देवता । मम शत्रुमुखस्तम्भनार्थे
सर्वकार्यसिद्ध्यर्थे च जपे विनियोगः ।

ध्यानम्

चन्द्राभं चरणारविन्दयुगलं कौपीनमौञ्जीधरं
नाभ्यां वै कटिसूत्रयुक्तवसनं यज्ञोपवीतावृतम् ।
हस्ताभ्यामवलम्ब्य चाञ्जलिमथो हारावलीकुण्डलं
बिभ्रद्दीर्घशिखं प्रसन्नवदनं दिव्याञ्जनेयं भजे ॥

मन्त्रः-ॐ नमो हनुमते रुद्राय ।
मम सर्वदुष्टजनमुखस्तम्भनं कुरु कुरु ॥

मम सर्वकार्यसिद्धिं कुरु कुरु । ऐं ह्रां ह्रीं ह्रूं फट् स्वाहा ।
note अष्टवारं जपेत् ।
आपन्नाखिललोकार्तिहारिणे श्रीहनूमते ।
अकस्मादागतोत्पातनाशनाय नमोऽस्तु ते ॥ १॥

सीतावियुक्तश्रीरामशोकदुःखभयापह ।
तापत्रयस्य संहारिन्नाञ्जनेय नमोऽस्तु ते ॥ २॥

आधिव्याधिमहामारिग्रहपीडापहारिणे ।
प्राणापहन्त्रे दैत्यानां रामप्राणात्मने नमः ॥ ३॥

संसारसागरावर्तागतसम्भ्रान्तचेतसाम् ।
शरणागतमर्त्यानां शरण्याय नमोऽस्तु ते ॥ ४॥

राजद्वारे बिलद्वारे प्रवेशे भूतसङ्कुले ।
गजसिंहमहाव्याघ्रचोरभीषणकानने ॥ ५॥

महाभयेऽग्निसंस्थाने शत्रुसङ्गसमाश्रिते ।
शरणागतमर्त्यानां शरण्याय नमो नमः ॥ ६॥

प्रदोषे वा प्रभाते वा ये स्मरन्त्यञ्जनासुतम् ।
अर्थसिद्धियशःकामान् प्राप्नुवन्ति न संशयः ॥ ७॥

कारागृहे प्रयाणे च सङ्ग्रामे देशविप्लवे ।
ये स्मरन्ति हनूमन्तं तेषां सन्ति न आपदः ॥ ८॥ नास्ति विपत्तयः
वज्रदेहाय कालाग्निरुद्रायामिततेजसे ।
नमः प्लवगसैन्यानां प्राणभूतात्मने नमः ॥ ९॥

दुष्टदैत्यमहादर्पदलनाय महात्मने ।
ब्रह्मास्त्रस्तम्भनायास्मै नमः श्रीरुद्रमूर्तये ॥ १०॥

जप्त्वा स्तोत्रमिदं पुण्यं वसुवारं पठेन्नरः ।
राजस्थाने सभास्थाने वादे प्राप्ते जपेद्ध्रुवम् ॥ ११॥

विभीषणकृतं स्तोत्रं यः पठेत् प्रयतो नरः ।
सर्वापद्भ्यो विमुच्येत नात्र कार्या विचारणा ॥ १२॥



 